# Shri Martandabhairava Stotram



# श्रीमार्तण्डभैरवस्तोत्रम्

## Sanskrit Document Information

Text title : mArtaNDabhairavastotram

File name : mArtaNDabhairavastotram.itx

Category : shiva

Location : doc_shiva

Latest update : December 17, 2018

Send corrections to : sanskrit@cheerful.com

This text is prepared by volunteers and is to be used for personal study and research. The file is not to be copied or reposted without permission, for promotion of any website or individuals or for commercial purpose.

**Please help to maintain respect for volunteer spirit.**

December 17, 2018

*sanskritdocuments.org*

# श्रीमार्तण्डभैरवस्तोत्रम्



भैरवा ऊचुः -
नमो मार्ताण्डनाथाय स्थाणवे परमात्मने ।
भैरवाय सुभीमाय त्रिधाम्नेश नमो नमः ॥ १॥

मृतोद्धारणदक्षाय गर्भोद्धरणहेतवे ।
तेजसां केतवे तुभ्यं हेतवे जगतामपि ॥ २॥

हिरण्यगर्भरूपाय धीप्रणोदाय ते नमः ।
ओङ्कारव्याहृतिस्थाय महावीराय ते नमः ॥ ३॥

वीरेशाय नमस्तुभ्यं क्षेत्रेशाय नमो नमः ।
वेदार्थाय च वेदाय वेदगर्भाय शम्भवे ॥ ४॥

विश्वामित्राय सूर्याय सूरये परमात्मने ।
महाभैरवरूपाय भैरवानन्ददायिने ॥ ५॥

द्विविधध्वान्तध्वंसाय महामोहविनाशिने ।
मायान्धकारनाशाय चक्षुस्तिमिरभञ्जिने ॥ ६॥

मन्त्राय मन्त्ररूपाय मन्त्राक्षरविचारिणे ।
मन्त्रवाच्याय देवाय महामन्त्रार्थदायिने ॥ ७॥

यन्त्राय यन्त्ररूपाय यन्त्रस्थाय यमाय ते ।
यन्त्रैर्नियन्त्रैर्नियमैर्यमिनां फलदाय च ॥ ८॥

अज्ञानतिमिरध्वंसकारिणे क्लेशहारिणे ।
महापातकहर्त्रे च महाभयविनाशिने ॥ ९॥

भयदाय सुशीलाय भयानकरवाय ते ।
बीभत्साय च रौद्राय भीताभयप्रदायिने ॥ १०॥

तेजस्वितेजोरूपाय चण्डायोग्राय ते नमः ।

बीजाय बीजरूपाय बीजभर्गाय ते नमः ॥ ११॥

क्रोधभर्गाय देवाय लोभभर्गाय ते नमः ।
महाभर्गाय वै तुभ्यं ज्ञानभर्गाय ते नमः ॥ १२॥

घोरभर्गाय ते तुभ्यं भीतिभर्गाय ते नमः ।
सुशोकाय विशोकाय ज्ञानभर्गाय ते नमः ॥ १३॥

तत्त्वभर्गाय देवाय मनोभर्गाय वै नमः ।
दारिद्र्यदुःखभर्गय कामभर्गाय ते नमः ॥ १४॥

हिंसाभर्गाय तामिस्रभर्गाय जगदात्मने ।
अतिदुर्वासनाभर्ग नमस्ते भैरवात्मने ॥ १५॥

ध्यायन्ते यं भर्ग इति भर्गभर्गाय ते नमः ।
रोगभर्गाय देवाय पापभर्गाय ते नमः ॥ १६॥

महापातकभर्गाय ह्युपपातकभर्गिणे ।
महानिरयभर्गाय नृत्तभर्गाय ते नमः ॥ १७॥

क्लेशभर्गाय देवाय भौतिकघ्नाय ते नमः ।
मृत्युभर्गाय देवाय दुर्गभर्गाय ते नमः ॥ १८॥

ध्यानाद्ध्यायन्ति यद्भर्गं यमिनः संयतेन्द्रियाः ।
नाथाय भर्गनाथाय भर्गाय सततं नमः ॥ १९॥

वीरवीरेश देवेश नमस्तेऽस्तु त्रिधामक ।
महामार्ताण्ड वरद सर्वाभयवरप्रद ॥ २०॥

नमो वीराधिवीरेश सूर्यचन्द्रातिधामक ।
अग्निधामातिधाम्ने च महामार्ताण्ड ते नमः ॥ २१॥

वीरातिवीर वीरेश घोरघोरार्तिघोरक ।
महामार्ताण्डदेवेश भूयो भूयो नमो नमः ॥ २२॥

इति श्रीमार्तण्डभैरवस्तोत्रं सम्पूर्णम् ।

